यममात्योनिचखाने दमहंतंब्वलगमुत्किरामियम्मे समानोयमसमानोनि चखानेद महंतंब्वलगमुत्कि रामियम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहंतंब्व लगमुत्किरामियम्मेसजातोयमसजातोनिचखानोत्कि- र्यांकिरामि ॥ १॥ रक्षोहणोबोब्वलगहनः प्रोक्षामिवैष्णवान्रक्षोहणोवोब्वलगहनोवनयामि वैष्ण वान्रक्षोहणोवोब्वलगहनोवस्तृणामिवैष्णवान्रक्षोहणोवांब्वलगहनाऽउपदधामिवैष्णवोरक्षोहणो- वांब्वलगहनौपर्यूहामिवैष्णवी वैष्णवमसिवैष्णवास्थ ॥ २ ॥ रक्षसांभागोसिनिरस्त ठं० रक्ष- ऽइदमह ठं० रक्षोभितिष्ठामीदमह ठं० रक्षोबबाधऽइदमह ठं० रक्षोधमन्तमोनयामि॥ घृतेनद्यावापृ- थिवीप्रोर्णुवाथांवायोवेस्तोकानामग्निराज्यस्यवेतु स्वाहा स्वाहा कृतेऽऊर्ध्वनभसंमारुतंगच्छतम् ॥३॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहते ॥ द्रोणेसधस्थमासदत् ॥ ४ ॥ यदत्रसंस्थितंभूतंस्थानमाश्रि



यसर्वदा ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥१॥ अपःसर्पंतुतेभूतायेभूताभमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥ २ ॥ अपः क्रामंतुभूतानिपिशाचास्सर्वतोदिशम् ॥ सर्वे षामविरोधेनशांतिकर्मसमारभेत् ॥ ३ ॥ भूतानिराक्षसावापियेत्रतिष्ठन्तिकेचन ॥ तेसर्वेप्यपगच्छन्तु-

ग्रहयागंकरोम्यहं ॥ ४ ॥ इतितिष्ठन् पूर्वादिदिक्षुविकिरेत् ॥ उदकास्पर्शः ॥ ततः पञ्चगव्यकरणं ॥ गायत्र्यागोमूत्रं ॥ ॐ तत्स० गंधद्वारेतिगोमयम् ॥ ॐ गंधद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ २ ॥ आप्यायस्वेतिपयः ॐ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ ३ ॥ दधिक्राव्ण इतिदधिः ॐ दधिक्राव्णो० त् ॥ ४ ॥ तेजोसीत्याज्यं ॥ ॐ तेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवानामनाधृष्टन्देवयजनमसि ॥ ५ ॥ ॐ देवस्यत्वेतिकुशोदकं ॐ देवस्यत्वा० ॥ ६ ॥ ॐ प्रणवेनयज्ञीयकाष्ठेनालोड्य आपोहिष्ठेतित्रिभिर्मंत्रैः कर्मभूमियज्ञसंभारांश्चप्रोक्षयेत्० ततः कृतांजलिः स्वस्तिन० ॥ २ ॥ इतिमन्त्रद्वयं पठेत० भूमौप्रादेदशंकृत्वा देवाः आयांतु० यातुधानामपयांतु० विष्णो देवयजनं रक्षस्व ततः सर्वतोभद्रदेवतास्थापनपूजनंसर्वतोभद्रेकलशस्थापनविधिना कलशं संस्थाप्यकलशेप्रधानप्रतिमांसंस्थाप्य विधिनापूजयेत् ॥ ततोग्निस्थापनं कुण्डेस्थंडिलेवा ॥ कुण्डंचेत् उपरिमेखलायां श्वेतवर्णंविष्णुं पूजयेत् इदंवि० इतिमन्त्रेण ॥ मध्यमेखलायां रक्तवर्णं ब्रह्मयज्ञा० इतिमं० ब्रह्माणंसंपूज्य ॥ अथो

मेखलायांकृष्णवर्णंनमस्ते० इतिमं० रुद्रंसंपूज्य अम्बेअम्बि० इतिमं० योन्यांरक्तवर्णां गौरींपूजयेत् ॥
अस्मिन् ग्रहशांत्याख्येकर्मणिपंचभूः संस्कारपूर्वकमग्निस्थापनंकरिष्ये ॥ दर्भैः परिसमुह्य ॥ गोमयो
दकेनोपलिप्य ॥ स्रुवेणोल्लिख्य ॥ अनामिकाङ्गुष्ठेनोधृत्य ॥ उदकेनाभ्युक्ष्य ॥ॐ अग्निंदूतमित्यग्निं
स्थापयेत् ॥ अथ सूर्यादिग्रहाणांस्थापनक्रमः ॥ ईशानेमण्डलंकृत्वाग्रहाणांस्थापनंततः ॥ वृत्तमंडलमा-
दित्यं अर्धचन्द्रंनिशाकरं ॥ त्रिकोणंमंगलंचैवबुधं च धनुषाकृतिं ॥ गुरुमष्टदलंप्रोक्तंचतुःकोणं च
भार्गवं । नराकृतिंशनिंविद्याद्राहुं च मकराकृतिं ॥ केतुंखड्गसमंज्ञेयंग्रहमंडलकेशुभे ॥ १ ॥ अथवा ॥
वृत्तमण्डलमादित्यं चतुरस्रंनिशाकरं ॥ त्रिकोणंमंगलंचैवबुधंवैबाणसन्निभं ॥ गुरवेपट्टिशाकारं
पञ्चकोणंभृगुस्तथा ॥ मन्देचधनुषाकारं शूर्पाकारंतुराहवे ॥ केतवेचध्वजाकारंमंडलानिक्रमेणतु ॥ शु-
क्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्यौउदङ्मुखौ ॥ प्रत्यङ्मुखौशनीसोमौशेषादक्षिणतोमुखाः ॥ मध्येतुभा-
स्करंविद्याच्छशिनंपूर्वदक्षिणे । दक्षिणेलोहितंविद्याद्बुधंपूर्वोत्तरेणतु । उत्तरेणगुरुंविद्यात्पूर्वेणैवतु-
भार्गवम् ॥ पश्चिमेतुशनिंविद्याद्राहुंदक्षिणपश्चिमे ॥ पश्चिमोत्तरतंकेतुंइत्येषाग्रहसंस्थितिः ॥

आदित्याभिमुखास्सर्वेसाधिप्रत्यधिदेवताः ॥ अधिदेवतादक्षिणेवामेप्रत्यधिदेवताः ॥ अरुणोसूर्यभौ-
मौचश्वेतशुक्रोनिशाकरौ ॥ हरितवर्णोबुधश्चैवपीतवर्णागुरुस्तथा ॥ कृष्णवर्णौशनीराहू केतवस्तुत-
थैव च ॥ ततः पूर्वनिर्मितग्रहवेद्यांश्वेतवस्त्रंप्रसार्य नवग्रहमंडलंविलिख्य मध्यादिकोष्ठेषुउक्तदिक्षु
सूर्यादिग्रहाणां स्थापनं पूजनं च कुर्यात् । अथ सूर्याद्यावाहनं ॥ ॐ आकृष्णेनरजसावर्तमानो-
निवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ १ ॥ ॐ भूर्भुवः स्व-
कलिंगदेशोद्भवकाश्यपसगोत्ररक्तवर्णभोसूर्यइहागच्छइहतिष्ठसूर्यायनमः सूर्यमावाहयामिस्थापया-
मि ॥ १ ॥ ॐ इमंदेवाऽअसपत्नꣳ सुवध्वं महतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येन्द्रि-
याय ॥ इममुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकंब्राह्मणानाꣳ राजा ॥ २ ॥
ॐ भू० यमुनातीरोद्भवआत्रेयसगोत्रशुक्लवर्णभोसोमइहागच्छेहतिष्ठसोमायनमः सोममावाहयामि
स्थापयामि ॥ २ ॥ ॐ अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपाꣳ रेताꣳसि जि-
न्वति ॥ ॐ भू० अवन्तिकापुरोद्भवभारद्वाजसगोत्ररक्तवर्णभोभौमइ० भौमाय० भौमं० ॥ ३ ॥

द्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेस ठं० सृजेथामयं च ॥ अस्मिन्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवा
यजमानश्चसीदत ॥ ॐ भू० मगधदेशोद्भवआत्रेयसगोत्रहरितवर्णभोबुधइ० बुधाय०बुधमा ॥ ४ ॥
ॐ बृहस्पतेऽअतियदर्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेपु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्र
विणंधेहिचित्रम् ॥ ॐ भू० सिंधुदेशोद्भवआंगिरसगोत्रपीतवर्णभोबृहस्पतेइ० बृहस्पतये० बृह-
स्पतिं० ॥ ५ ॥ ॐ अन्नात्परिस्रुतोरसं ब्रह्मणाव्यपिवत्क्षत्रंपयः सोमंप्रजापतिः ॥ ऋतेनसत्यमिन्द्रि-
यंविपान ठं० शुक्रमंधसऽइन्द्रस्येन्द्रियमिदंपयोमृतंमधु ॥ ॐ भू० भोजकटदेशोद्भवभार्गवसगोत्रशुक्ल
वर्णभोशुक्रइ० शुक्राय शुक्रं० ॥ ६ ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवं-
तुनः ॥ ॐ भू० सौराष्ट्रदेशोद्भवकाश्यपसगोत्रकृष्णवर्णभोशनैश्चरइ० शनैश्चराय० शनैश्चरं ॥७॥
ॐ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ॐ भू० राठिनापुरोद्भवपैठिनस-
गोत्रकृष्णवर्णभोराहोइ० राहवेन० राहुं० ॥ ८ ॥ ॐ केतुं कृण्वंतुकेतवेपेशोमर्याऽअपेशसे ॥ समु-
षद्भिरजायथाः ॥ ॐ भू० अन्तर्वेदिसमुद्भवजैमिनसगोत्रकृष्णवर्णभोकेतोइ० केतवे० केतुं० ॥ ९ ॥

ततोऽधिदेवतास्थापनं ग्रहदक्षिणपार्श्वे ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबन्धना-
न्मृत्योर्मुक्षीयमामृतात् ॥ ॐ भू० ईश्वरेहा० ईश्वराय० ईश्वरं० ॥ १ ॥ श्रीश्चते० ण ॥ ॐ भू०
उमेहा० उमाय० उमां० ॥ २ ॥ ॐ यदक्रन्दः प्रथमंजायमानऽउद्यन्समुद्रादुतवापुरीखात् ॥ श्येन
स्यपक्षाहरिणस्यबाहू उपस्तुत्यंमहियातन्ते अर्वन् ॥ ॐ भू० स्कंदेहा० स्कंदाय० स्कन्दं० ॥ ३ ॥
ॐ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोः स्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥
ॐ भू० विष्णोइ० विष्णवे० विष्णुं० ॥ ४ ॥ ॐ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः
शूरइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषाजिष्णूरथेष्ठाः ॥
सभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनः पर्जन्योवर्षतुफलवत्योनऽओषधयः पच्यं-
तांयोगक्षेमोनः कल्पताम् ॥ ॐ भू० ब्रह्मन्० ब्रह्मणे० ब्रह्माणं० ॥ ५ ॥ ॐ सयोषाऽइन्द्रसगणोमरुद्भिः
सोमंपिब वृत्रहा शूरविद्वान् । जहिशत्रून् २ रपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः ॥ ॐ भू०
इन्द्रेहा० इन्द्राय० इंद्रं० ॥ ६ ॥ ॐ यमायत्वांगिरस्वते पितृमतेस्वाहास्वाहाघर्मायस्वाहाघर्मः

पित्रे ॥ ॐ भू० यमेइ० यमाय० यमं० ॥ ७ ॥ ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्या ऽउन्नयामि ॥ स
मापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ ॐ भू० कालेहा० कालाय० कालं ॥८॥ ॐ चित्रावसोस्व
स्तितेपारमशीय ॥ ॐ भू० चित्रगुप्तेहा० चित्रगुप्ताय० चित्रगुप्तं० ॥९॥ ततः प्रत्यधिदेवतास्थापन-
म्र० वामपार्श्वे ॐ अग्निंदूतपुरोदधेहव्यवाहमुपब्रुवे ॥ देवा ऽआसादयादिह ॥ ॐ भू० अग्नेइ०
अग्नये० अग्निं० ॥ १ ॥ ॐ आपोहिष्ठा० ॐ भू० अपइहागच्छतइहतिष्ठतअद्भ्योन० अपः
आ० ॥ २ ॥ ॐ स्योनापृथिवि० ॐ भू० पृथिविइ० पृथिव्यै० पृथिवीं० ॥ ३ ॥ ॐ इदंविष्णु-
र्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपा ठं० सुरेस्वाहा ॥ ॐ भू० विष्णोइ० विष्णवे० विष्णुं० ४॥
ॐ इन्द्र आसान्नेतावृहस्पतिर्दक्षिणायज्ञःपुरऽएतुसोमः ॥ देवसेनानामभिभंजतीनांजयंतीनांमरुतोयं-
त्वग्रम् । ॐ भू० इन्द्रेहा० इन्द्राय० इन्द्रं ॥ ५ ॥ ॐ आदित्यैरास्नासीन्द्राण्याउष्णीषः ॥ पूषासिघर्माय-
दीष्व ॥ ॐ भू० इन्द्राणिइ० इन्द्राण्यै० इन्द्राणीं० ॥६॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिता-
बभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवय ठं० स्यामपतयोरयीणाम् ॥ ॐ भू० प्रजापतेइ० प्रजापतये०



२२

प्रजापति ॥७॥ ॐ नमोस्तुसर्पेभ्योयेकेच पृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः ॥ ॐ भू० सर्पाः इहागच्छतइहतिष्ठत० सर्पेभ्यो० सर्पान्० ॥ ८ ॥ ॐ ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोव्वेन ऽआवः ॥ सबुध्न्याउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चव्विवः ॥ ॐ भू० ब्रह्मन्इ० ब्रह्मणे० ब्रह्माणं० ॥ ९ ॥ ततोविनायकादिपंचलोकपालदेवताः वास्तोष्पतिंक्षेत्रपालंत्वावाहयेत् ॥ ॐ गणानांत्वा० ॐ भू० गणपतेइ० गणपतये० गणपतिं० ॥१॥ ॐ अंबेऽअम्बिके० ॐ भू० दुर्गेइ० दुर्गायै० दुर्गां० ॥२॥ ॐ वायाजेतेसहस्रिणोरथाशस्तेभिरागहि ॥ नियुत्वान्सोमपीतये ॥ ॐ भू० वायोइ० वायवे० वायुं ॥ ३ ॥ ॐ घृतंघृतपावानः पिवतव्वसांवसापावानः पिवतान्तरिक्षस्यहविरसि स्वाहा ॥ दिशः प्रदिशऽआदिशोव्विदिशऽउद्दिशोदिग्भ्यः स्वाहा ॥ ॐ भू० आकाश इहा० आकाशाय० आकाशं० ॥ ४ ॥ ॐ यावांकशामधुमत्यश्विनासूनृतावती । तयायज्ञंमिमिक्षताम् ॥ ॐ भू० अश्विनौ इहागच्छतं इहतिष्ठतं अश्विभ्यांनमः अश्विनौ० आवाहयामि० ॥ ५ ॥ ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः ॥ यत्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदे ॥

ओं भू० वास्तोष्पतेइ० वास्तोष्पतये० वास्तोष्पतिं ॥६॥ ॐ नहिस्पर्शमविदंनन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः ॥ एमेनमवृधन्नमृताअमर्त्यंवैश्वानरंक्षैत्रजित्यायदेवाः ॥ ॐ भू० क्षेत्राधिपतेइ० क्षेत्राधिपतये० क्षेत्राधिपतिमावा० ॥७॥ अथमंडलाद्बाह्येदशदिक्पालानावाहयेत् ॐ त्रातारमिन्द्रमवितारमिन्द्र ठं० हवेहवेसुहव ठं० शूरमिन्द्रम् ॥ ह्वयामिशक्रंपुरुहूतमिन्द्र ठं० स्वस्तिनोमघवाधात्विन्द्रः ॥ ॐ भू० इन्द्रेहा० इन्द्राय० इन्द्रं० ॥ १ ॥ ॐ त्वन्नोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेष ठं० रक्षमाणस्तवव्रते ॥ ॐ भू० अग्नेइ० अग्नये० अग्निं० ॥ २ ॥ ॐ यमायत्वांगिरस्वतेपितृ० ॐ भू० यमेहा० यमाय० यमं ॥ ३ ॥ ओं असुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐ भू० निर्ऋतेइ० निर्ऋतये० निर्ऋतिं० ॥ ४ ॥ ॐ तत्वायामि० ॐ भू० वरुणइ० वरुणाय० वरुणं० ॥ ५ ॥ ॐ आनोनियुद्भिःशतिनीभिरध्वर ठं० सहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः ॥ ॐ भू० वायोइ० वायवे० वायुं० ॥ ६ ॥

ॐ वय ठं० सोमव्रतेतवमनस्तनूषुविभ्रतः प्रजावंतः सचेमहि ॥ ॐ भू० सोमेहा० सोमाय० सोमं० ॥७॥ ॐ तमीशानंज० ॐ भू० ईशानेहा० ईशानाय० ईशानं० ॥ ८ ॥ ॐ अस्मेरुद्रामेहनापर्वतासो· वृत्रहत्येभरहूतौसयोषाः ॥ यः श ठं० सतेम्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअस्माऽअवन्तुदेवाः ॥ पूर्वेशान योर्मध्ये ॥ ॐ भू० ब्रह्मन्० ब्रह्मणे० ब्रह्माणं० ॥ ९ ॥ ॐ स्योनापृथिवि० निर्ऋतिपश्चिमयोर्मध्ये ॥ ॐ भू० अनन्तेहा० अनन्ताय० मअनन्तं० ॥ १० ॥ ॐ मनोजूतिर्जु० ॐ सूर्यादिअनन्तांत देवताः सुप्रतिष्ठिताः वरदाःभवन्तु ॥ सूर्यादिअनन्तान्त देवताभ्योनमः इति मन्त्रेण आसना द्युपचारैः प्रत्येकमेकत्रवाकांडानुसमयेनपदार्थानुसमयेनवाषोडशोपचारैः संपूज्यप्रार्थयेत् ॥ ग्रहाऽऊ· र्ध्वहुतयोव्यन्तोविप्रायमतिम् ॥ तेषांविशिप्रियाणांवोहमिषमूर्जं ठं० समग्रभमुपयामगृहीतोसीन्द्रा- यत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ ग्रहस्येशानदिग्भागे कलशस्थापनविधिनारुद्रक- लशंसंस्थाप्यकलशेवरुणं असंख्यातरुद्रांश्चावाह्यपूजयेत् ॥ ॐ असंख्यातासहस्राणियेरुद्राऽअधिभू- म्याम् ॥ तेषा ठं० सहस्रयोजनेवधन्वानितन्मसि ॥ असंख्यातरुद्रेभ्यो० असंख्यातरुद्रान्० ॥ अथ

कुशकंडिकाकरण ॥ अग्नेर्दक्षिणतोब्रह्मासनं ॥ अग्नेरुत्तरतः प्रणीतासनद्वयं ॥ ब्रह्मासनेब्रह्मोपवेशनं ॥ यावत्कर्मसमाप्यतेतावत्त्वंब्रह्माभव ॥ भवामीतिप्रतिवचनम् ॥ ब्रह्मानुज्ञातः ॥ प्रणीताप्रणयनं ॥ प्रणय ॥ ईशानादिपूर्वाग्रैः कुशैः परिस्तरणं ॥ आग्नेयादीशानांतं ॥ ब्रह्मणोग्निपर्यंतं ॥ नैर्ऋत्याद्वायव्यान्तं ॥ अग्नितः प्रणीतापर्यंतं ॥ अथपात्रासादनं ॥ पश्चादुत्तरतोवास्यात् ॥ त्रीणिपवित्रेद्वे ॥ प्रोक्षणीपात्रं ॥ आज्यस्थाली ॥ चरुस्थाली ॥ संमार्गकुशाःपंच ॥ उपयमनकुशाःसप्त ॥ समिधस्तिस्रः ॥ स्रुवः ॥ आज्यं ॥ तण्डुलाः ॥ पूर्णपात्रं ॥ वृषनिष्क्रयदक्षिणा ॥ उपकल्पनायानिद्रव्याणिनिधाय ॥ पवित्रच्छेदनानि ॥ द्वयोरुपरि-त्रीणि निधाय ॥ द्वौमूलेनप्रदक्षिणीकृत्य ॥ त्रिभिश्छिद्य ॥ द्वौग्राह्यौ त्रिस्त्याज्यः ॥ प्रोक्षणीपात्रे प्रणीतोदकमासिच्य ॥ त्रिः पूर्णं ॥ पवित्राभ्यामुत्पवनं ॥ प्रोक्षण्याःसव्यहस्तकरणं ॥ दक्षिणेनोद्दि-ङ्गनं ॥ प्रणीतोदकेनप्रोक्षणीनांप्रोक्षणं ॥ प्रोक्षण्युदकेनआज्यस्थाल्याः प्रोक्षणं ॥ चरुस्थाल्याः प्रो० ॥ संमार्गकुशानांप्रो० ॥ उपयमनकुशानांप्रो० ॥ समिधांप्रो० स्रुवस्यप्रो० ॥ आज्यस्यप्रो० ॥

तण्डुलानांप्रो० ॥ पूर्णपात्रस्यप्रो० ॥ उपकल्पनीयानांपदार्थानांप्रो० ॥ असंचरेनिधानं ॥ प्रणीता ग्नयोर्मध्ये ॥ आज्यस्थाल्यामाज्यनिर्वापः ॥ चरुस्थाल्यांप्रणीतोदकासेकपूर्वकंतण्डुलप्रक्षेपः ॥ ब्रह्मा दक्षिणत आज्याधिश्रयणं ॥ चरोरधिश्रयणमाज्यस्योत्तरतः ॥ ज्वलदुल्मुकेनोभयोः पर्यग्निकरणं ॥ इतरथावृत्तिः ॥ उदकोपस्पर्शः ॥ अर्धश्रितेचरौ अधोमुखस्यस्रुवस्यप्रतपनं ॥ संमार्जन कुशैः स्रुवस्योर्ध्वमुखस्यसंमार्जनं ॥ बुध्न्यादारभ्यकुशैरग्रपर्यंतंसंमृज्य अग्रादारभ्य अधस्तान्मूलैर्मुलांतं ॥ प्रणीतोदकेनाभ्युक्षणं ॥ पुनःप्रतपनं ॥ दक्षिणदेशेनिधानं ॥ आज्योद्वासन ॥ चरुपूर्वेणानायाग्नेरुत्तरतः स्थापयेत् ॥ चरोरुद्वासनं ॥ अग्नेरुत्तरतएवाज्यं प्रदक्षिणीकृत्य आज्यस्योत्तरतः चरुंस्थापयेत् ॥ आज्योत्पवनं ॥ आज्यावेक्षणं ॥ अपद्रव्यनिरसनं ॥ प्रोक्षण्युत्पवनं ॥ उपयमन कुशादानं ॥ प्रोक्षण्युदकेनसपवित्रहस्तेनईशानादिअग्नेः प्रदक्षिणंपर्युक्षणं ॥ पवित्रयोः ॥ प्रणीतासुनिधानं ॥ दक्षिणंजान्वारभ्य॥ ब्रह्मणा कुशैरन्वारब्धः ॥ स्रुवेणाज्यहोमः ॥ अग्नेरुत्तरभागे॥ ॐ प्रजापतयेस्वाहा ॥ इदंप्रजापतयेनमः ॥ अग्नेर्दक्षिणभागे ॥ ॐ इन्द्रायस्वाहा ॥ इदमिंद्रायन

मः ॥ समिद्धतमेग्नौ ॥ ॐ अग्नयेस्वाहा ॥ इदमग्नयेनमः ॐ सोमायस्वाहा ॥ इदंसोमायन मः ॥ ततः सूर्यादिग्रहाणां अधिदेवताप्रत्यधिदेवतागणपत्यादिपंचलोकपालदेवतानांइन्द्रादिदशदि क्पालदेवतानां प्रत्येकमभित्तिलचर्वाज्यद्रव्यैः अष्टोत्तरसहस्रमष्टोत्तरशतं अष्टाविंशतिमष्टौवाजुहु याद् अस्मिन्ग्रहशांतिकर्मणिइमानि हवनीयद्रव्याणियायाद्यमाणदेवताभ्यस्ताभ्यः मयापरित्य क्तंनमः ॥ यथादैवतमस्तु इति कुशकंडिकाकरणम् अथसूर्यादिनवग्रहाणां प्रणवादिस्वाहांत होममन्त्राः ॥ ॐ गणानांत्वा० नम स्वाहा ॐ अम्बे ऽअ० नीम्स्वाहा ॥ १ ॥ ॐ आकृष्णे० पश्यन् स्वाहा ॥ १ ॥ ॐ इमन्देवाअ० राजास्वाहा ॥ २ ॥ ॐ अग्निर्मू० न्पतिस्वाहा ॥३॥ ॐ उद्बुध्य० सीदतस्वाहा ॥ ४ ॥ ॐ वृहस्प० चित्रम्स्वाहा ॥ ५ ॥ ॐ अन्नात्प० मधु वाहा ॥ ६ ॥ ॐ शन्नोदे० तुनः स्वाहा ॥ ७ ॥ ॐ कयान० वृतास्वाहा ॥ ८ ॥ ॐ केतुङ्कृ० यथा स्वाहा ॥ ९ ॥ त्र्यम्बकं० मृतातस्वा ॥ १० ॥ श्रीश्चते० इषाणस्वाहा ॥ ११ ॥ यदक्रन्दः० अर्वन्स्वाहा ॥ १२ ॥ विष्णोररा० वेत्वास्वाहा ॥ १३ ॥ आब्रह्म० ताम्स्वाहा ॥१४॥ सजोषा०

तोनः स्वाहा ॥ १५ ॥ यमायत्वा॰ पित्रेस्वाहा ॥ १६ ॥ कार्षिर पषीःस्वाहा ॥१७॥ चित्राव॰ शीपस्वाहा ॥ १८ ॥ अग्निन्दू॰ दिहस्वाहा ॥ १९ ॥ आपोहि॰ यचक्षसेस्वाहा ॥ २० ॥ स्योनापृ॰ प्रथाः स्वाहा ॥ २१ ॥ इदम्वि॰ सुरेस्वा ॥ २२ ॥ इन्द्रआ॰ प्रमृस्वाहा ॥ २३ ॥ अदित्यै॰ दीष्वस्वाहा ॥ २४ ॥ प्रजापते॰ णाम्स्वाहा ॥ २५ ॥ नमोस्तुस॰ नमः स्वाहा ॥ २६ ॥ ब्रह्मय॰ विवः स्वहा ॥ २७ ॥ गणाना॰ घम् स्वाहा ॥ २८ ॥ अम्बेऽम॰ नीम्स्वाहा ॥ २९ ॥ वायोजेते॰ तयेस्वाहा ॥ ३० ॥ घृतंघृत॰ द्भिभ्यः स्वाहा ॥ ३१ ॥ यावांक॰ ताम्स्वाहा ॥ ३२ ॥ वास्तोष्पते॰ ष्पदेस्वाहा ॥ ३३ ॥ नहिस्पश॰ देवाः स्वाहा ॥ ३४ त्रातारमि॰ त्विन्द्रः स्वाहाः ॥ ३५ ॥ त्वन्नोअग्ने॰ व्रतेस्वाहा ॥ ३६ ॥ यमायत्वां पित्रेस्वाहा ॥ ३७ ॥ असुन्वंत॰ मस्तुन्वंत॰ मस्तुस्वाहा ॥ ३८ ॥ तत्वाया॰ मोषीः स्वाहा ॥ ३९ ॥ आनोनि॰ दानः स्वाहा ॥ ४० ॥ वय ॐ सो॰ महिस्वहा ॥ ४१ ॥ तमीशानं॰ स्त्रयेस्वाहा ॥ ४२ ॥ अस्मेरुद्रा॰ देवाः स्वाहा ॥ ४३ ॥ स्योनाप प्रथाः स्वाहा । ४४ ततः प्रधानहोमः ॥ प्रधानहोमानन्तरं ब्रह्मादिमण्डलदेवता

एकैकमाज्याहुत्यायद्दोशेषे- णस्विष्टकृदादिहोमः ॥ प्रधानहोमानन्तरं ब्रह्मादिमण्डलदेवताश्च

एकैकयाज्याहुत्यायद्दोशेषेणस्विष्टकृदादिहोमः ओं अग्नेनयसुपथारायेऽअस्मान्विश्वानिदेवव्वयुना निविद्वान् ॥ युयोध्यस्मज्जु हुराणमेणोभूयिष्ठान्तेनमऽउक्तिंविधेम ॥ १ ॥ ओं स्वाहा स्त्रधायुता ग्नयेवश्वानरायनम इतिमंत्रेणाग्निसंपूज्य ॥ ततोहुतशेषद्रव्यं गृहीत्वा ॥ ब्रह्मणान्वारब्धः स्विष्ट कृद्धोमंकुर्यात् ॥ ओं अग्नयेस्विष्टकृतेस्वाहा ॥ इदमग्नयेस्विष्टकृतेनमः ॥ ततोभूरादिनवाहुतयः ॥ ओं भूः स्वाहा ॥ इदमग्नयेनमः ॥ ओं त्वन्नोऽअग्नेव्वरुणस्यव्विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः यजिष्ठावन्हितमः शोशुचानोव्विश्वाद्वेषा गवं सिप्रमुमुग्ध्यस्मत्स्वाहा ॥ इदमग्नीवरुणाभ्यांनमः ॥ ओंसत्वन्नऽ॒ऽसत्वन्नोअग्नेवमाभवोतीनेदिष्ठाअस्याऽउषसोव्युष्टौ॥अवयक्ष्वनोवरुणठं॰रराणोव्वीहिमृडी कठं॰ सुहोनएधिस्वाहा ॥ इदमग्नेवरुणाभ्यांनमम॥ अग्राश्चाग्ने ॥ स्वयनभिशातर्पासाश्चस्त्यमि त्वमयाऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजठं॰ स्वाहा ॥ इदमग्नयेअयसेनमः ॥ ओं येतेशतंवरुणंयेसहस्रंयज्ञियाः पाशाविततामहान्तः ॥ तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतः

स्वर्का: स्वाहा ॥ इदं णायसवित्रे विष्णवे विश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्केभ्यश्चनमम् ॥ ओं उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यम ठं० श्रथाय ॥ अथावयमादित्यव्रतेतवानागसोऽअदितये स्यामस्वाहा ॥ दं वरुणायादित्यायादितयेनमम ॥ ओं प्रजापतयेस्वाहा ॥ इदंप्रजापतयेनमम ॥ इति नवाहुतयः॥अग्न्यायतनस्यसमंताद्दि चतुर्दिक्षुदशदिक्पालानांसदीपमाषभक्तबलयोर्देयाः ॥ ओं त्रातारमिंद्रं० त्विंद्रः इन्द्राय सांगायसपरिवारायसायुधायसशक्तिकायएतंसदीपमाषभक्तबलिं समर्पयामि भो इन्द्रस्वां दिशंरक्षबलिंः भक्षममसकुटुंबस्यसपरिवारस्य आयुः कर्ताक्षेमकर्ताशुभकर्तापुष्टिकर्ता तुष्टिकर्तावरदोभव । अनेनबलिदानेनइन्द्रः प्रीयताम् ॥ एवंसर्वत्र १ ओं त्वंनोअग्ने० अग्नयेसां० भोअग्ने दिशंरक्षबलिं० अ० अग्निः प्री० । २ ॥ ओं यमायत्वां० पित्रे ॥ यमायसां० मि ॥ भोयमदि० बलिं० अ० यमः प्री० ॥ ३ ॥ ओं असुन्वंतम० निर्ऋतयेसां० बलिं मिं भोनिर्ऋतेदि० अ० निर्ऋतिः प्री० ॥ ४ ॥ ओं तत्वायामि० षोः वरुणायसां ॥ भोवरुणादि० ॥ अ० ॥ वरुणः प्री० ॥ ५ ॥ ओं आनोनियु० नः

वायवेमां० मि० ॥ भोवायोदि० अ० वायुः प्री० ॥ ॐ ॥ वय ठं० सोम० हि ॥ सापायसां०
भोसोमदि० बलिं० अ० सोमः प्री० ॥७॥ ॐ ईशानं० ये ईशानायसां० मि ॥ भोईशानदि०
अ० ईशानः प्री० ॥८॥ ॐ असमेरुद्रामे० त्वा० ॥ ब्रह्मणेसा० मि ॥ भोब्रह्मन्दि० अ० ब्रह्माप्री०
॥ ९ ॥ ॐ स्योनापृ० प्रथाः । अनंतायपां० मि ॥ भो अनंतदि० बलिं० अ० अनंतः प्री०
॥ १० ॥ ततोग्रहवेदीपश्चिमेग्रहादिभ्यः सदीपमाषभक्तबलयोदेयाः ॐ आकृष्णेन० पश्यन् ॥ १ ॥
सूर्याय सांगाय सपरिवाराय सायुधाय सशक्तिकाय ईश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहि-
ताय एतं सदीपमाषभक्तबलिं समर्पयामि । भो सूर्य इमं बलिं गृहाण मम सकुटुंबस्यसपरिवारस्य
आयुःकर्ता क्षेमकर्ता शुभकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव ॥ अनेनबलिदानेन-
सूर्यः प्रीयताम् ॥ १ ॥ ॐ इमन्देवा० राजा ॥ सोमायसां० उमाऽपापोरूपाधिदेवत प्रत्यधिदे०
मि । भोसोमइमं बलिं ॥ अने० सोमः प्री० ॥ २ ॥ ॐ अग्निर्मू० ति । भौमाय सां० स्कंद-
भूमिरूपाधिदेवताप्रत्यधिदे० मि । भो भौमइमं बलिं० । अनेन० भौमः प्री० ॥ ३ ॥ ॐ उद्ब-

ध्यस्वा० त। बुधायसां० नारायणविष्णुरूपाधिदेवता प्रत्यधिदेवतास० मि। भोबुधइमव०। अनेन० बुधः प्री० ॥ ४ ॥ ॐ बृहस्पते० म०। बृहस्पतये सां० ब्रह्मेन्द्ररूपाधिदेवताप्रत्यधिदे० मि ॥ भोबृहस्पतेइमं व० ॥ अनेन० बृहस्पतिः प्रीय० ॥ ५ ॥ ॐ अन्नात्परि० धु। शुक्रायसां० इन्द्रेन्द्राणीरूपाधिदेवताप्रत्यधिदे० मि। भोशक्रइमं व०। अनेन० शुक्रः प्री० ॥ ६ ॥ ॐ शन्नो-देवी० नः। शनैश्चरायसां० यमप्रजापतिरूपाधिदेवताप्रत्यधिदे० मि। भोशनैश्चरइमं व०। अनेन शनैश्वरः प्री० ॥ ७ ॥ ॐ कयानश्चि० ता। राहवेसां० कालसर्परूपाधिदेवताप्रत्यधिदे० मि। भोराहोइमं व०। अनेन० राहुः प्री० ॥ ८ ॥ ॐ केतुं कृण्वं० थाः। केतवे °ं० चित्रगुप्त-ब्रह्मरूपाधिदेवताप्रत्यधिदेवताप्रत्यधिदे० मि। भोकेतोइमं व० अनेन० गण॰ . प्री० ॥ १ ॥ ॐ अम्बे अम्बिके० । दुर्गायैसांगायै० मि०। भोदुर्गेइमं० आयुः कर्त्रीदो- शां० पु० तु० वरदाभव। अनेन० दुर्गाप्री० ॥२॥ वायोजे० ये। वायवेसां० मि० ॥ भोवायोइमं व०। अनेन० वायुः प्री० ॥ ३ ॥ ॐ घृतं घृत० हा ॥ आकाशायसां० मि। भो आकाशइमं व० अनेन०

आकाशः प्री० ॥ ४ ॥ ॐ यावांकशा० म् । अश्विभ्यांमांगाभ्यां० मि । भोअश्विनौइमंबलिं गृन्हातंमम० आयुः कर्तारौ० वरदौभवतं । अ० अश्विनौप्रीयेतां ॥ ५ ॥ ॐ वास्तोष्पतेप्र० दे० । वास्तोष्पतयेसां० मि ॥ भोवास्तोष्पतेइमं ६ अनेन० वास्तोष्पतिः प्री० ॥ ६ ॥ अथवादिक्पालेभ्यएकमन्त्रेणैकमेव बलिंदद्यात् ॐ प्राच्यैदिशेस्वाहार्वाच्यै दिशेस्वाहादक्षिणायैदिशेस्वाहार्वाच्यै दिशेस्वाहाप्रतीच्यै दिशेस्वाहार्वाच्य दिशेस्वाहोदीच्यै दिशेस्वाहार्वाच्यै दिशेस्वाहोर्द्ध्वायै दिशेस्वाहार्वाच्यै दिशेस्वाहावाच्यै दिशेस्वाहार्वाच्य दिशेस्वाहा ॥ इन्द्रादिदशदिक्पालेभ्यः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतान्सदीपमाषभक्तबलीन्समर्पयामि । भोभो-इन्द्रादिदशदिक्पालाः सांगाः सपरिवाराः सायुधाः सशक्तिकाः ममस० आयुष्कर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदाः भवत ॥ अनेनबलिदानेन इन्द्रादिदशदिक्पालाः प्रीयंतां १ एवंसर्वेभ्योग्रहेभ्यः एकतन्त्रेणैकमेवबलिंदद्यात् । ॐ ग्रहाऊर्जा० म् । सूर्यादिनवग्रहेभ्यः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः अधिदेवताप्रत्यधिदेवतागणपत्यादिपञ्चलोक-

पालवास्तोष्पतिसहितेभ्यः एतं सदीपमाषभक्तबलिंसमर्पयामि । भोभोसूर्यादिग्रहाः सांगाः संपरिवाराः सायुधाः सशक्तिकाः अधिदेवता प्रत्यधिदेवता गणपत्यादिपञ्चलोकपालवास्तोष्पतिसहिताः ममसकुटुंबस्यसपरिवारस्यआयुः कर्तारः क्षेमकर्तारः शुभकर्तारः शांतिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदा भव ॥ अनेनबलिदानेन सूर्यादिग्रहाः प्रीयन्ताम् । अथक्षेत्रपालबलिदानम् । एस्कस्मिन्वंशादिपात्रेकुशानास्तीर्यतदुपरि आढकचतुर्गुणंद्विगुणंवा माषभक्तदध्योदनंवा जलपात्रंचनिधायचतुर्मुखंदीपं प्रज्वाल्यहारिद्रावंकुंमादिपताकायुतं कृत्वा । ॐ नहिस्पश० वाः क्षेत्रपालायनमइति संपूज्यप्रार्थयेत् ॐ नमोक्षेत्रपालस्त्वंभूतप्रेतगणैःसह॥ पूजाबलिंगृहाणेमंसौम्योभवतुसर्वदा ॥ आयुरारोग्यमेदेहिनिर्विघ्नंकुरुसर्वदा ॥ ततोबलिदानं ॥ क्षेत्रपालायसांगायसपरिवारायसायुधायसशक्तिकायमारीगणभैरवराक्षसकूष्माण्डवेतालभूतप्रेतपिशाचडाकिनी शाकिनीगणसहितायएतं सदीपमाषभक्तबलिंसमर्पयामि ॥ भोक्षेत्रपालक्षेत्रंरक्षबलिंभक्षममसकुटुंबस्य सपरिवारस्य आयुः कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदोभव । अनेनबलिदानेन

क्षेत्रपालाः प्रीयंताम् यजमानस्यमस्तकोपरिसकृद्भ्रामयित्वा । अनेनवक्ष्यमाणेन दुर्ब्राह्मणेनशूद्रेण वाबलिंगृहीत्वाचतुष्पथेनिक्षिपेत् । ततोयजमानस्तस्य पृष्ठतोद्वारपर्यन्ते गत्वाजलं क्षिपेद्धिङ्कारेणे तिमन्त्रेण ओं हिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्रंदतेस्वाहावक्रन्दायस्वाहा प्रोथतेस्वाहाप्रोथाय स्वाहा गन्धायस्वाहाघ्रातायस्वाहानिविष्ठायस्वाहा सन्दितायस्वाहावल्गतेस्वाहासीनायस्वाहाश यानायस्वाहास्वपतेस्वाहाजाग्रते स्वाहाकूजपतेस्वाहा प्रबुद्धायस्वाहाविजृम्भमाणायस्वाहाविवृत्ताय स्वाहा स ठं० हानायस्वाहोपस्थितायस्वाहाप्रायणाय स्वाहा ॥ यजमानः पाणिपादं प्रक्षाल्याचम्य ॥ ततः नारिकेलादिफलरक्तवस्त्रवेष्टितं द्वादशद्वचतुः स्रुवेणगृहीतमाज्यं स्रुच्यां कृत्वा ओं पूर्णाहुत्यैनम इति संपूज्य पूर्णाहुतिंजुहुयात् । तन्मन्त्राः ओं समुद्रादूर्म्मिमधुमाँ ऽउदारदुपा ठं० शुनासमम्तत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानञ्चतुः शृंगोवमीद्गौर ऽएतत् ॥ २ चत्त्वारिशृगात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धावृषभोरोरवीतिम

होदेवामर्त्याऽआविवेश ॥ ३॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽएकं
सूर्यऽएकञ्जजानवेनादेकं स्वधयानिष्टतक्षुः ॥ ४ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजा
रिपुणानावचक्षे । घृतस्य धाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥ ५ ॥ सम्यक्स्रव
न्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽइव क्षिपणोरीषमा
णा । ६ ॥ सिन्धोरिव प्राध्वनेशूघनासोवातप्रमियः पतयन्तियह्वाः ॥ घृतस्यधाराऽअरुषो
नव्वाजीकाष्ठाभिन्दन्नूर्म्मिभिः पिन्वमानः ॥ ७ ॥ अभिप्रवन्तसमनेव योषाः कल्याण्यः
स्मयमाना सोऽअग्निम् ॥ घृतस्यधाराः समिधोनसन्तताजुषाणोहर्य्यति जातवेदाः ॥ ८ ॥
कन्याऽइव वहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्रसोमः सूयतेयत्रयज्ञोघृतस्यधारा
ऽअभितत्पवन्ते ॥ ९ ॥ अभ्यर्षतसुष्टुतिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमं यज्ञन्नय तदे
वतानोघृतस्यधारामधुमत्पवन्ते ॥ १ ॥ धामन्तेविश्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्यन्तरायुषि ॥
अपामनीकेसमिथेयऽआभृतस्तमश्याममधुमन्तन्तऽऊर्मिम् ॥ ११ ॥ पुनस्त्वादित्यारुद्रावसवः

समिन्धताम्पुनर्ब्रह्माणोवसुनीथयज्ञः ॥ घृतेनत्वन्तन्वंवर्धयस्वसत्याः सन्तुयजमानस्यकामाः ॥१२॥ सप्तते॒ऽअग्नेसमिधः सप्तजिह्वाः सप्तऽऋषयः सप्तधामप्रियाणि ॥ सप्तहोत्राः सप्तधात्वायजन्तिसप्त योनीरापृणस्वघृतेनस्वाहा ॥ १३ ॥ मूर्द्धानंदिवोअरतिंपृथिव्याऽवैश्वानरमृतऽआजातमग्निम् ॥ कवि ठं० सम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयंतदेवाः ॥ १४ ॥ पूर्णादर्विपरापत सुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्ज ठं० शतक्रतो स्वाहा ॥ १५ ॥ इदमग्नयेवैश्वानरायवसुरुद्रादित्येभ्यः शतक्रतवेसप्तवतेअग्नयेअद्भ्यश्चनमः ॥ ततोत्र ऋर्द्धां जुहुयात् ॥ तत्रमंत्राः ॥ ओं सप्तते अग्नेसमिधः स० ॥ १ ॥ शुक्रज्योतिश्चचित्रज्योतिश्चसत्यज्योतिश्चज्योतिष्मांश्च ॥ शुक्रश्चऽऋतपाश्चात्य ठं० हाः ॥ २ ॥ ईदृङ्चान्यादृङ्चसदृङ्चप्रतिसदृङ्च ॥ मितश्चसम्मितश्चसभराः ॥ ३ ॥ ऋतश्चसत्यश्चध्रुवश्चधरुणश्च । धर्त्ताचविधर्त्ताचविधारयः ॥ ४ ॥ ऋतजिच्चसत्यजिच्च सेनजिच्च सुषेणश्च ॥ अन्तिमित्रश्चदूरेऽअमित्रश्चगणः ॥ ५ ॥ ईदृक्षासऽएतादृक्षासऊषुणः सदृक्षासः प्रतिसदृक्षासऽएतन ॥ मितासश्चसम्मितासोनोऽअद्यसभरसोमरुतः यज्ञे

स्वतवांश्चप्रघासीचसान्तपनश्चगृहमेधीच ॥ क्रीडीचशाकीचोज्जेषि ॥
अस्मिन् ॥ ६ ॥ इन्द्रंदैवीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥
॥ ७ ॥ एवमिमंयजमानन्दैवीश्चविशोमानुषीश्चानुवर्त्मानोभवन्तु ॥ ८ ॥ इम ठं० स्तनमूर्ज्ज
स्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमध्ये ॥ उत्सञ्जुषस्वमधुमन्तमर्व्वन्त्समुद्रिय ठं० सदनमा
विशस्व ॥ ९ ॥ घृतम्मिमिक्षेघृतमस्य० ॥१॥ वसोः प० त्तः स्वाहा ॥ ततोऽग्निंप्रदक्षिणीकृत्य-
पश्चिमदेशेप्राङ्मुखोपविश्य ॥ ततः स्रुवेणभस्म नीय ॐ त्र्यायुषंजमदग्नेः इति ललाटे । कश्य-
पस्यत्र्यायुषम् । इति ग्रीवायां । यद्देवेषुत्र्यायुषं इति दक्षिणांशे ॥ तन्नोऽअस्तुत्र्यायुषमितिहृदि ।
संस्रवप्राशनं । आचमनं । पवित्राभ्यांमार्जनं । अग्नौपवित्रः प्रतिपत्तिः ॥ ब्रह्मणे
पूर्णपात्रदानं ॥ कृतस्य गृहशान्तिहोमकर्मणोंगतयाविहितमिदं पूर्णपात्रं सदक्षिणं ब्रह्मणेतुभ्यमहं
संप्रददे ॥ ॐ द्यौस्त्वाददातु पृथिवीत्वाप्रतिगृह्णातु ॥ अग्नेःपश्चात्प्रणीताविमोकः ॥ ॐ आपः
शिवाः शिवतमाः शांताः शान्ततमास्तास्ते कृण्वंतुभेषजं उपयमनकुशैर्मार्जयेत् ॥ उपयमनकुशा-

नामग्नौप्रक्षेपः ॥ ततः श्रेयः संपाद्यदानं ॥ अद्येत्यादिकृतस्यगृहशांत्याख्यस्यकर्मणः यजमाना
यश्रेयोदानं करिष्ये ॥ तत्रादौवचः प्रतिवचनम् । शिवाआपः सन्तु ॥ सन्तुशिवाआपः ॥ सौमन
स्यमस्तु ॥ अस्तुसौमनस्यं ॥ अक्षतंचारिष्टं चास्तु ॥ अस्त्वक्षतमरिष्टं च ॥ यजमानहस्तेगंधादिदा
नं ॥ गन्धाः पांतु ॥ सुमंगल्यंचास्तु ॥ अक्षताः पान्तु ॥ आयुष्यमस्तु ॥ पुष्पाणिपान्तु ॥ सौश्रिय
मस्तु ॥ यत्पापंरोगं अशुभंअकल्याणं तद्दूरेप्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु । भवन्नियोगेनमयाऽस्मि
न्गृहशान्त्याख्येकर्मणियत्कृत आचार्यत्वंतदुत्पन्नंश्रेयः तत् अमुनासाक्षतेन सजलेनतुभ्यमहं
संप्रददे प्रतिगृह्यतां । प्रतिगृह्णामि ॥ तेनश्रेयसात्वंश्रेयोवान्भव ॥ यजमानः भवामीति ॥ नवाक्यम्
एवमेवब्रह्मादयोऋत्विजोजापकादयश्च ॥ यद्वा ॥ ब्रह्मादयोऋत्विजोजापकाश्चआचार्यद्वाराश्रेयो
दानं कुर्युः ॥ तद्यथा ॥ भवन्नियोगेनमयाअस्मिन्गृहशांत्याख्येकर्मणियत्कृतं आचार्यत्वं तथाए
तैर्ब्राह्मणैः सहयत्कृतंब्रह्मत्वं गाणपत्यत्वंसादस्यत्वंतथान्यैः कृतजपः आचार्यत्वात् ब्रह्मत्वात् गाणप
त्यत्वात् सादस्यत्वात यदुत्पन्नंश्रेयः तत अमुनासाक्षतेनसजलेनपूगीफलेनतुभ्यमहंसंप्रददे ॥ तेन

श्रेयसात्वंश्रेयोवान्भव ॥ भवामीतितेनवाच्य ॥ ततोआचार्यादीन् गन्धवस्त्रालंकारादिभिर्यथावि भवंपूजयेत् ॥ आचार्यादिभ्योब्राह्मणेभ्योदक्षिणांदद्यात् तत्रक्रमः ॥ आचार्यायगां ॥ १ ॥ ब्रह्मणेवृषभं ॥ २ ॥ सदस्यायअश्वं ॥ ३ ॥ ऋत्विभ्योसुवर्णंदद्यात् ॥ ४ ॥ कृतस्यगृहशान्तिकर्मणः सांगतासिध्यर्थं तत्संपूर्णफलप्राप्त्यर्थं इदंगोनिष्क्रयभूतद्रव्यं अमुकगोत्रायअमुकशर्मणेब्राह्मणाय आचार्यायतुभ्यमहंसंप्रददे । ॐ स्वस्तीतिपठेत् ॥ १ ॥ कृ० इदंवृषनिष्क्रयभूतं द्रव्यंय० ॥ २ ॥ कृ० इदंसदस्यायअश्वनिष्क्रयभू० ॥ ३ ॥ कृ० इदं ऋत्विग्भ्यः सुवर्णनिष्क्रयभू० ॥ ४ ॥ ततोब्राह्मण भोजनसंकल्पंकुर्यात् ॥ कृतस्य० गृहशा० कर्म० यथासंख्याकान्ब्राह्मणान् यथाकालेयथोपपन्नेनान्ने नाहभोजयिष्ये ॥ भोजनांतेतेभ्यः ताम्बूलदक्षिणांचदास्ये ॥ ततो गृहपीठदेवतानां गन्धादिपंचो पचारैरुत्तरपूजनं ॥ आवाहितदेवताभ्योनमः ॥ आचार्यायप्रधानपीठंदद्यात ॥ कृ० थं इदं गृहपीठं मातृकापीठसोपस्करं दक्षिणासहितं आचार्यायतु० ॥ ततोरुद्रकलशदेवतान्तरकलशोदकमेकस्मिन्पा त्रेकृत्वादूर्वापंचपल्लवैरुदङ्मुखआचार्यरितष्ठन् चत्वारोऋत्विजश्चसकुटुम्बंसपत्नीकंयजमाने प्राङ्मुख

मुपविष्टम भिषिंचेयुः ॥ तत्रमन्त्राः देवस्यत्वा० ॥ सरस्वत्यैव्वाचोयन्तुर्यन्त्रियेदधामिवृहस्पतेष्ट्वासा
म्राज्येनाभिषिञ्चाम्यसौ ॥ १ ॥ देवस्यत्वा० ॥ सरस्वत्यैव्वाचोयंतुर्यंत्रेणाग्नेः साम्राज्येनाभिषिंचा
मि ॥ २ ॥ देवस्यत्वा ३ ॥ अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिचामिसरस्वत्यै भैषज्येनव्वी
र्यायान्नाद्यायाभिषिचामीन्द्रस्येन्द्रियेणबलाय श्रियैयशसेभिषिंचामि ॥ ३ ॥ ॐ सुरास्त्वामभिषिं
चंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्चभव
न्तुविजयायते ॥ आखण्डलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरुणः पवनश्चैवधनाध्यक्ष
स्तथाशिवः॥॥ ब्रह्मणासहिताः सर्वेदिक्पालाः पांतुतेसदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिः श्रद्धा
क्रियामतिः ॥ बुद्धिर्लज्जावपुः शान्तिः कान्तिस्तुष्टिश्चमातरः ॥ ४ ॥ एतास्त्वामभिषिंचन्तु
देवपत्न्यः समागताः ॥ आदित्यश्चन्द्रमाभौमोबुधजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिंच
न्तराहुः केतश्चतर्पिताः ॥ देवदानवगन्धर्वायक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयोमनवोगावदेवमा
तरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अस्त्राणि सर्वशस्त्राणिराजा

नोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ८ सरितः सागराः शैलास्तीर्थानिज लदानदाः ॥ एतेत्वामभिषिंचन्तुधर्मकामार्थसिद्धये ॥ ६ ॥ अमृताभिषेकोस्तु ॥ शान्तिः पुष्टिस्तु ष्टिश्चास्तु । अन्येभ्योब्राह्मणेभ्योयथाशक्ति भूयसींदक्षिणांदद्यात् कृतस्यग्रहशांतिकर्मण सांगता सिद्ध्यर्थंतन्मध्ये न्यूनातिरिक्त दोष परिहारार्थं नानागोत्रेभ्यो नानाशर्मभ्योब्राह्मणेभ्यः समाश्रितबं धुवर्गेभ्योदीनानाथेभ्यश्चयथोत्साहांभूयसींदक्षिणांविभज्यदातुमहमुत्सृजे ॥ ततोदेवताग्निसानुनयं विसृज्य ॥ ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयंतुमरुतः सुदानवऽइन्द्रप्राशूर्भवासचा ॥ यान्तुदेवगणाः सर्वेपूजामादायमामकाम् ॥ इष्टकामसमृध्यर्थंपुनरागमनायच ॥ आवाहितदेवताः स्व स्थानेगच्छत ॥ ॐ यज्ञयज्ञङ्गच्छयज्ञपतिङ्गच्छस्वांयोनिंगच्छस्वाहा ॥ एषयज्ञोयज्ञपतेसहसूक्त वाकः सर्ववीरस्तञ्जुषस्वस्वाहा ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छहु ताशन ॥ यज्ञनारायणस्वस्थानेगच्छ ॥ २ ॥ ॐ चतुर्भिश्चचतुर्भिश्चद्वाभ्यां पञ्चभिरेवच ॥ हूयतेच पुनर्द्वाभ्यां तस्मैयज्ञात्मनेनमः ॥ मयायत् तं यथाकालं यथादेशंयथाज्ञानंयथाशक्तिगृह्य

प्र० ३२

शा० ३३

ज्ञाख्यंकर्म तेनश्रीपरमेश्वरः प्रीयतां ॥ ॐ तत्सत्ब्रह्मार्पणमस्तु ॥ सकुशजलंभूमौक्षिपेत् ॥
करौसंपुटीकृत्य । मयायत्कृतंग्रहयज्ञाख्यंकर्मतत्कालहीनं भक्तिहीनं शक्तिहीनं भवतां ब्राह्मणानांव
चनात् श्रीसूर्याद्यावाहितदेवताप्रसादात्सर्वविधेः परिपूर्णमस्त्विति भवन्तोब्रुवन्तु ॥ अस्तुपरिपूर्ण
मिति ब्राह्मणा वदेयुः ॥ जपच्छिद्रंतपश्छिद्रंयच्छिद्रंशान्तिकर्मणि ॥ सर्वं भवतु मेऽच्छिद्रंब्राह्मणानां
प्रसादतः । प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् । स्मरणादेवतद्विष्णोः संपूर्णंस्यादिति श्रुतिः ॥
यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु । न्यूनसंपूर्णतांयातु सद्यो वंदेतमच्युतं । ॐ विष्णवेनमः
ततो तिलकाशीर्वादः । श्रीवर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते ॥ धान्यं धनं पशुबहु
पुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ मंत्रार्थाः सफलाः संतुपूर्णाः संतुमनोरथाः ॥
शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तव ॥ ब्राह्मणान् भोजयित्वा दीनानर्थिन
श्चान्नादिना सन्तोष्यस्वयंसुहृन्मित्रादियुतः सोत्साहः सन्तुष्टोहविष्यं भुंजीतेतिशिवम् ॥ इतिश्री
मन्मालवीयवेणीराम मिश्रात्मज यागेश्वर मिश्र कृतोग्रहयज्ञप्रयोगस्समाप्तः ॥

॥ श्रीगणेशाय नमः ॥ अथ सर्वतोभद्रलिङ्गतोभद्रकारिका ॥ प्रागुदीच्यागता रेखाः कुर्यादे कोनविंशतिं । खण्डेन्दुस्त्रिपदः कोणे शृंखला पञ्चभिः पदैः ॥ १ ॥ एका दशपदा वल्ली भद्रन्तु नवभिः पदैः ॥ चतुर्विंशत्पदा वापी परिधिर्विंशतिः पदैः ॥ २ ॥ मध्ये षोडशभिः कोष्ठैः पद्मम ष्टदलं स्मृतं ॥ श्वेतेन्दुः शृंखला कृष्णा वल्ली नीलेन पूर्येत् ॥ ३ ॥ भद्रारुणा सिता वापी परिधिः पीत वर्णकः ॥ बाह्यान्तः दलः श्वेता कर्णिका पीतवर्णिका ॥ ४ ॥ परिध्यावेष्टितं पद्मं बाह्यं सत्वं रजस्तमः ॥ तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांश्च सुरेश्वरान् ॥ ५ ॥ इति सर्वतोभद्रं ॥ अथ लिंगतोभद्रं ॥ रेखास्त्व ष्टादश प्रोक्ताश्चतुर्लिंगसमुद्भवे ॥ कोणेन्दुस्त्रिपदः श्वेतस्त्रिपदैः कृष्णांशृंखलाः ॥ १ ॥ वल्लीस प्तपदा नीला भद्रं रक्तचतुष्पदं ॥ भद्रपार्श्वे महारुद्रं कृष्णमष्टादशैः पदैः ॥ २ ॥ शिवस्य पार्श्वतो वा- पीं कुर्यात्पञ्चपदां सिताम् ॥ पदमेकं तथा पीतं भद्रवाप्योस्तु मध्यतः ॥ ३ ॥ शिरसि शृंखलायाश्च कुर्यात्री तंपदत्रयम् ॥ लिंगानां स्कन्धतः कोष्ठा विंशतिरक्तवर्णकाः ॥ ४ ॥ परिधि पीतवर्णैस्तु पदैः षोडश भिः स्मृतः ॥ पदैस्तु नवभिः पश्चाद्रक्तपद्मं सकर्णिकं ॥ ५ ॥ इति लिंगतोभद्रं ॥ तत्र पञ्चवर्णान्यु

क्तानि पञ्चगात्रे ॥ रजांसिपञ्चवर्णानिमण्डलार्थेहिकारयेत् ॥ शालितण्डुलचूर्णेनशुक्लं वायवसम्भवं ॥ १ ॥ रक्तंकुसुम्भसिंदूरगैरिकादिसमुद्भवं ॥ हरिद्रानोद्भवं पीतंरजनीसम्भवंक्वचित् ॥ २ ॥ कृष्ण दग्धैर्यवैः कार्यंहरितं बिल्वचूर्णकं ॥ कारयेत्सर्वधान्यैर्वावर्णकैराशोभितं ॥३॥ अथ भद्रे देवतास्थापनक्रमः ॥ साचार्योयजमानः सर्वतोभद्रमण्डलसमीपे उपविश्य आचम्य ३ प्राणानायम्य ॥ मध्ये कर्णिकायां ॐ ब्रह्मणेनमः ब्रह्माणमावाहयामिस्थापयामि ॥ १ ॥ एवमग्रेपिउत्तरेवाप्यां ॐ सोमाय० सोमं० ॥ ५ ॥ ईशान्यांखण्डेन्दौ ॐ ईशानाय० ईशानं० ॥ ३ ॥ पूर्ववाप्यां ॐ इन्द्राय० इन्द्रं० ॥ ४ ॥ आग्नेयांखण्डेन्दौ ॐ अग्नये० अग्नि० ॥ ५ ॥ दक्षिणेवाप्यां ॐ वायुं० ॥ ९ ॥ यमाय० यमं ॥ ६ ॥ नैर्ऋत्यांखण्डेन्दौ ॐ निर्ऋतये० निर्ऋतिं० दश ॥ ७ ॥ पश्चिमेवाप्यां ॐ वरुणाय वरुणं ॥ ८ ॥ वायव्यांखण्डेन्दौ ॐ वायवे० वायुसोममध्येभद्रेलिङ्गेवाॐ अष्टवसुभ्यो० अष्टव० ॥ ११ ॥ सोमेशानमध्येभद्रेलिङ्गे ॐ एकादशरुद्रेभ्यो० एकादशरुद्रान ॥ १२ ॥ ईशानेन्द्रमध्ये ॐ द्वादशादित्येभ्यो० द्वादशादि० ॥ १२ ॥

इद्राग्नयोर्मध्येभद्रेलिङ्गे ॐ अश्विभ्यां० अश्विनौ० ॥ २३ ॥ अग्नियममध्येभद्रेलिङ्गे ॐ सपैतृक
विश्वेभ्योदेवे० सपैतृकविश्वान्देवान् ॥ १४ ॥ यमनिर्ऋतिमध्येभद्रेलिङ्गे सप्तयक्षेभ्यो० सप्तयक्षा०
॥ १५ ॥ निर्ऋतिवरुणमध्येभद्रेलिङ्गे ॐ भूतनागेभ्यो० भूतनागान् ॥ १६ ॥ वरुणवायुमध्येभद्रे
लिङ्गेॐ गन्धर्वाप्सरोभ्यो० गन्धर्वाप्सरसान् ॥ १७ ॥ ब्रह्मसोममध्येलिङ्गवाप्यां ॐ स्कन्दाय०
स्कन्दं ॥ १८ ॥ तदुत्तरे ॐ बृषभं ॥ १९ ॥ तदुत्तरे ॐ शूलाय० शूलं० ॥ २० ॥ तत्रैव ॐ
महाकालाय० महाकालं० ॥ २१ ॥ ब्रह्मेशानमध्येशृंखलायां ॐ दक्षादिसप्तगणेभ्यो० दक्षादि
सप्तगणा० ॥ २२ ॥ ब्रह्मेन्द्रमध्येवाप्यां ॐ दुर्गायै० दुर्गा ॥ २३ ॥ तत्पूर्वे ॐ विष्णवे विष्णुं०
॥ २४ ॥ ब्रह्माग्निमध्येशृंखलायां ॐ स्वधायै० स्वधां ॥ २५ ॥ ब्रह्मयममध्येवाप्यां ॐ मृतुरोगे
भ्यो० मृतुरोगा० ॥ २६ ॥ ब्रह्मनिर्ऋतिमध्ये शृंखलायां ॐ गणपतये० गणपति ॥ २७ ॥ ब्रम्ह
वरुणमध्येवाप्यां ॐ अद्भ्यो० आपःआ० ॥२८॥ ब्रह्मवायुमध्येशृंखलायांॐमरुद्भ्यो० मरुतःआ
॥ २९ ॥ ब्रम्हणःपाद लेकर्णिकाधः मध्य एव ॐ पृथिव्यै० पृथिवीं० ॥ ३० ॥ तत्रैव ॐ गङ्गा

दनदीभ्यो० गङ्गादिनदीः आ० ॥ ३१ ॥ तत्रैव ॐ सप्तसागरेभ्यो० सप्तसागरा० ॥ ३२ ॥ तदुपरिकर्णिकापार्श्वे ॐ मेरवे० मेरुं० ॥ ३३ ॥ वाह्यपरिधौसोमसमीपे ॐ गदायै० गदां० ॥ ३४ ॥ ईशानान्तिके ॐ त्रिशूलाय० त्रिशूलं ॥ ३५ ॥ इन्द्रांतिके ओं वज्राय० वज्रं० ॥ ३६ ॥ अग्निसमीपे ओँ शक्तये० शक्तिं० ॥ ३७ ॥ यमान्तिके ओँ दण्डाय० दण्डं० ॥ ३८ ॥ निर्ऋतिसमीपे ओँ खड्गाय० खड्गं० ॥ ३९ ॥ वरुणांतिके ओँ पाशाय० पाशं ॥ ४० ॥ वायुसमीपे ओँ अङ्कुशाय० अङ्कुशं० ॥ ४१ ॥ तद्बाह्ये उत्तरे ओँ गौतमाय० गौतमं० ॥४२॥ इशान्ये ओँ भरद्वाजाय० भरद्वाजं० ॥ ४३ ॥ पूर्वे ओँ विश्वामित्राय विश्वामित्रं ॥ ४४ ॥ आग्नेयां ओँ कश्यपाय० कश्यपं० ॥ ४५ ॥ दक्षिणे ओँ जमदग्नये० जमदग्नि ॥ ४६ ॥ ओँ वसिष्ठं० वसिष्ठं ॥ ४७ ॥ पश्चिमेऽत्रये० अत्रिं० ॥ ४८ ॥ वायव्यां ओँ अरुन्धत्यै० अरुन्धतीं० ॥४९॥ तद्बाह्ये पूर्वादिक्रमेण ओँ ऐन्द्र्यै० ऐन्द्री ॥ ५० ॥ ओँ कौमार्यै० कौमारीं० ॥ ५१ ॥ ओँ ब्राह्म्यै० ब्राह्मीं ॥ ५२ ॥ ओँ वाराह्यै० वाराहीं ॥ ५३ ॥ ओँ चामुण्डायै० चामुण्डा० ॥ ५४ ॥

ओं वैष्णव्यै० वैष्णवीं ॥ ५५ ॥ ओं माहेश्वर्यै० माहेश्वरीं० ॥ ५६॥ ओं वैनायक्यै० वैनायकीं ॥ ५७॥ इतिरुद्रकल्पद्रुमाद्यनुसारी सर्वतोभद्रदेवताः ॥ अथ लिंगतोभद्र देवता विशेषः ॥
तद्वाह्यपूर्वे असितांगभैरवाय० असितांग भैरवं० ॥ १ ॥ आग्नेय्यांरुरु भैरवाय० रुरुभैरवं० ॥ २ ॥
दक्षिणे ओं चण्डभैरवाय० चण्डभैरवं० ॥ ३ ॥ नैर्ऋत्यां ओं क्रोधभैरवाय० क्रोधभैरवं० ॥ ४ ॥
पश्चिमे ओं उन्मत्तभैरवाय० उन्मत्तभैरवं ॥ ५ ॥ वायव्यां ओं कपालभैरवाय कपालभैरवं॥ ६ ॥
उत्तरे ओं भीषणभैरवाय भीषणभैरवं ॥ ७ ॥ ईशान्यां ओं संहारभैरवाय० संहारभैरवं ॥ ८ ॥ तद्वाह्येपूर्वादिक्रमेण ओं भवाय भवं ॥ ९ ॥ ओं शर्वाय शर्वं ॥ १० ओं पशुपतये० पशुपतिं ॥ ११ ॥
ओं ईशानाय० ईशानं ॥ १२ ॥ ओं रुद्राय० रुद्रं० ॥ १३ ॥ ओं उग्राय० उग्रं० ॥ १४ ॥ ओं भीमाय० भीमं ॥ १५ ॥ ओं महते० महांतं ॥ १६ ॥ ओं अनंताय० अनंतं ॥ १७ ॥ ओं वासुकये वासुकिं ॥ १८ ॥ ओं तक्षकाय० तक्षकं ॥ १९ ॥ ओं कुलिशाय० कुलिशं ॥ २० ॥ ओं कर्कोटकाय० कर्कोटकं ॥ २१ ॥ ओं शंखपालाय० शंखपालं ॥ २२ ॥ ओं कंबलाय० कंबलं

॥ २३ ॥ ओं अश्वतराय० अश्वतरं ॥ २४ ॥ ईशानेन्द्रयोर्मध्ये ओं शूलाय० शूलं ॥ २५ ॥ इन्द्राग्न
योर्मध्ये० ओं चन्द्रमौलिनं० ॥ २६ ॥ अग्नियमयोर्मध्येचन्द्रमसं ॥ २७ ॥ यमनिर्ऋतिमध्ये ओं
बृषभध्वजाय० बृषभध्वजं ॥ २८ ॥ निर्ऋतिवरुणयोर्मध्ये त्रिलोचनाय० त्रिलोचनं ॥ २९ ॥ वरुण
वायुमध्ये ओं शक्तिधराय० शक्तिधरं० ॥ ३० ॥ वायुं सोमयोर्मध्ये ओं महेश्वराय० महेश्वरं०
॥ ३१ ॥ सोमेशानयोर्मध्ये ओं शूलपाणये० शूलपाणिः० ॥ ३२ ॥ इतिलिंगः भ० दे० ॥ अथ
प्रतिमासुअग्न्युत्तारणविधिः ॥ आचार्यः पात्रान्तरेप्रतिमांनिधाय घृतेनाभ्यज्य ॥ उपरिजलधारांकु
र्यात् ॥ तत्रमन्त्राः ओं समुद्रस्यत्वा ॥ १ ॥ मिस्यत्वा ॥ २ उपज्मन्नु० ॥ ३ ॥ अपामिदन्या ॥ ४ ॥
अग्नेपावक० ॥ ५ ॥ सनः पावक दी० ॥ ६ ॥ पावकायाय० ॥ ७ ॥ नमस्ते हरसे ॥ ८ ॥ नृपदे
॥ ९ ॥ येदेवादेवानां० ॥ १० ॥ येदेवादेवेत्वधि० ॥ ११ ॥ प्राणदो ॥ १२ ॥ अथप्राणप्रतिष्ठांकृत्वा
प्रतिमां हस्तेन संस्पृश्यबीजमन्त्रान्जपेत् ॥ ओं आँ ह्रीं क्रों यं लं वं शं षं सं हं सः अस्यप्राण
॥ पुनः आँ ह्रीं० सः । ४ अस्य जीवइहस्थितः ॥ एवमग्रेपिसर्वेन्द्रियाणी वांगमनस्त्वक चक्षुश्रो

त्रजिह्वाघ्राणप्राणाः इहागत्य स्वस्तये सुखंचिरं तिष्ठन्तु स्वाहा ॥ आस्ये प्राणाः प्रतिष्ठंतु आस्येप्राणाः क्षरंतु च ।। आस्यैदेवत्वमर्चायमामहेतिकश्चन ॥ इतिप्राणप्रतिष्ठां कृत्वा प्रतिमां पूजयेत् ॥ इति अग्न्युत्तारणविधिः समाप्तः ॥

अथ शिवादिपंचायतनस्थापनक्रमः ॥ शंभौ मध्यगते हरानहरभू देव्योहरौ शंकरे ॥ भास्ये नागसुता रवौ हर गणेशाजाऽम्बिकास्थापिता ॥ देव्यां विष्णुहरैकदंतरवयोर्लंबोदरे ईश्वरे ॥ नानाऽऽर्या शंकरभाग तोनिसुखदाः व्यस्तास्तुतेहानिदाः ॥ अन्यच्च ॥ स्वस्थानवर्जितादेवाः शोकदुःखभयप्रदाः ॥ अथ व्युत्क्रमस्थापने व्यवस्था ॥ दग्धोग्निनंत्र भग्ने च स्थूलं वज्रं हतं तथा ॥ संपुटं स्फुटितं व्यंगलिंगभित्येवमादिकमिति सिद्धांतशेखरोक्ते ॥ लिंगं देवतास्वरूपचिन्हं ॥ संपुटंन्युब्जत्रिपगेतं ॥ पीठान्च चालितं लिंग निर्दोषंतुभवेद्यदि ॥ ततोपि स्थापयेतत्र जपेल्लक्षमघोरकम् ॥ पुनः विधिवत्स्थापयेत् ॥ सर्वारिष्टविनाशार्थं सर्वप्राणि हितार्थकम् ॥ तु व्युत्क्रमविषयं ॥

गृहे लिंगं द्वयेनार्च्य शालिग्रामद्वयं तथा ॥ शक्तित्रयं तथा नार्च्यं गणेशत्रितयं तथा ॥

 

नार्चयेच्च तथा मत्स्यकूर्मादिदशकं तथा ॥ एतेषां पूजनान्नित्यमुद्वेगं प्राप्नुयाद्गृही ॥ २ ॥ शालिग्रामाः समाः पूज्या विषमा न कदाचन ॥ समेषु द्वितयं नेष्टं विषमेष्वेकमेवहि ॥३ शालिग्राम



शिलायाश्च प्रतिष्ठानं नविद्यते ॥ यवमात्रं तु गर्तस्याद्यवार्द्धं लिंगमुच्यते । शिवनाभिरितिख्याता स्त्रिषु लोकेषु दुर्लभम् । ४ ॥

**विष्णुपंचायतन ।**

| ई. | पूर्व | आ. |
|---|---|---|
| शिव २ | | गणेश ३ |
| उ. | विष्णु १ | द० |
| देवी ५ | | सूर्य ४ |
| वा. | पश्चिम | नै. |

**गणेशपंचायतन ।**

| ई. | पूर्व | आ. |
|---|---|---|
| विष्णु २ | | शिव ३ |
| उ. | गणेश १ | द० |
| देवी ५ | | सूर्य ४ |
| वा. | पश्चिम | नै. |

**शिवपंचायतन ।**

| ई. | पूर्व | आ. |
|---|---|---|
| विष्णु २ | | सूर्य ३ |
| उ. | शिव १ | द० |
| देवी ५ | | गणेश ४ |
| वा. | पश्चिम | नै. |

**देवीपंचायतन ।**

| ई. | पूर्व | आ. |
|---|---|---|
| विष्णु २ | | शिव ३ |
| उ. | देवी १ | द० |
| सूर्य ५ | | गणेश ४ |
| वा. | पश्चिम | नै. |

**सूर्यपंचायतन ।**

| ई. | पूर्व | आ. |
|---|---|---|
| शिव २ | | गणेश ३ |
| उ. | सूर्य १ | द० |
| देवी ५ | | विष्णु ४ |
| वा. | पश्चिम | नै. |

**श्रीरामचन्द्रस्थापन क्रमः ।**

| | उत्तर | |
|---|---|---|
| | हनुमान | |
| प. सीता | राम | लक्ष्मण पू. |
| भरत | | शत्रुघ्न |
| | दक्षिण | |

दक्षिणे लक्ष्मणोपेतं वामे तु जनकात्मजां ॥ सम्मुखे मारुतसुतं पृष्ठे शत्रुघ्नभारतम् ॥ १ ॥ इति मत्स्यपुराणोक्त

इति

# समन्त्रक ग्रहशान्तिप्रयोग

समाप्तः